॥ परशुरामस्तुती ॥

श्री गणेशाय नमः ।
कुलाचला यस्य महीं द्विजेभ्यः प्रयच्छतः सोमदृषत्त्वमापुः ।
बभूवुरुत्सर्गजलं समुद्राः स रैणुकेयः श्रियमातनीतु ॥ १॥

नाशिष्यः किमभूद्भवः किपभवन्नापुत्रिणी रेणुका
नाभूद्विश्वमकार्मुकं किमिति यः प्रीणातु रामत्रपा ।
विप्राणां प्रतिमन्दिरं मणिगणोन्मिश्राणि दण्डाहतेर्नाब्धीनो
स मया यमोऽर्पि महिषेणाम्भांसि नोद्वाहितः ॥ २॥

पायाद्वो यमदग्निवंशतिलको वीरव्रतालङ्कृतो
रामो नाम मुनीश्वरो नृपवधे भास्वत्कुठारायुधः ।
येनाशेषहताहिताङ्गरुधिरैः सन्तर्पिताः पूर्वजा
भक्त्या चाश्वमखे समुद्रवसना भूर्हन्तकारीकृता ॥ ३॥

द्वारे कल्पतरुं गृहे सुरगवीं चिन्तामणीनङ्गदे पीयूषं
सरसीषु विप्रवदने विद्याश्चतस्रो दश ।
एव कर्तुमयं तपस्यति भृगोर्वंशावतंसो मुनिः
पायाद्वोऽखिलराजकक्षयकरो भूदेवभूषामणिः ॥ ४॥

॥ इति परशुराममस्तुतिः ॥